ஸம்ஸ்க்ருதஶ்ரீ:

# ॥ संस्कृतश्रीः ॥

संस्कृतविद्यासमिति पत्रिका



SAMSKṚTAŚRĪ

ஸம்ஸ்க்ருதஶ்ரீ

A Fortnightly Bulletin of the Samskrit Education Society, Madras.



Annual Subscription Rs. 8-00

Single Copy 0-40 Ps.

Life Subscription Rs. 100-00

9, Single Mall Street, Tiruchirapalli-620 002.

माला—4 पुष्पम्—10

वागीश्वर्यै नमः

सुरासुरासेवितपादपङ्कजा
करे विराजत्कमनीयपुस्तका ।
विरिञ्चिपत्नी कमलासनस्थिता
सरस्वती नृत्यतु वाचि मे सदा ॥

"समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम् ।
विनश्यत्स्वविनश्यन्तं यः पश्यति स पश्यति ॥"

[அசைவற்ற, அசைவுள்ள எல்லாப்பொருள்களிலும் ஸமமாக
நிலவும் ஈச்வரனை, பொருள்கள் அழிவடைந்திடினும், அழியாத
வரை எவன் அறிகின்றானோ அவனே அறிவடைந்தவன்.]

—பகவத்கீதை, XIII 28



*With the best compliments of :-*

**SESHASAYEE PAPER AND BOARDS LTD.**

**PALLIPALAYAM,**

**Erode-638 007**

SALEM Dt.–(Tamil Nadu)

श्रीगुरुभ्यो नमः

# ॥ संस्कृतश्रीः ॥

कलि 5082-रौद्र-कुंभ-24 (4-9) 7—3—81

स्कन्दजननीमुखेन्दोरस्मान् पुष्णातु सुस्मितज्योत्स्ना ।
मुनिमतिकैरविणीनामुल्लासकथा यदायत्ता ॥

—वासिष्ठगणपतिमुनेः उमासहस्रतः

## चरैव चरैव (६)

"कृत्स्नो हि लोको बुद्धिमतामाचार्यः"। तत्संभाव्यते। कथं स एव गुरुः "शत्रुश्चाबुद्धिमताम्"? "वितरति गुरुर्विद्यां प्राज्ञे यथैव तथा जडे" इति हि भवभूतिः। न तस्यैकस्मिन् पक्षे भक्तिर्भवितुमर्हति। न सुतरां द्वेषोऽन्यत्र। शत्रुत्वे आचार्यत्वमस्मादपेयान्नु ? सत्यं, न स पक्षपाती, परं सर्वेषु विनेयेषु अव्याजैव करुणा तस्य। स उपदिशत्येव उपदेश्यं विनैव संकोचम्। परं बुद्धिमान् गृह्णाति तं, यथा गृहीतमात्मन उपकाराय कल्पते। अबुद्धिमानपि गृह्णाति, यथा ग्रहणं न युज्यते। तस्य बुद्धिर्विपर्येति विषयमन्यथा। तथा च अबुद्धिमति दोषः। आचार्यस्तेन न दुष्यति। परं विस्मयायेदं—यदत्र नाचार्यः संकल्पते शत्रुर्भूयामिति। न वा शिष्योऽबुद्धिमान् विकल्पते गुरुरयं हितोऽहितो वेति। परं घटते तथा यथाचार्यः शत्रुर्भवति शिष्यगतमबुद्धिमत्त्वं हेतुमपदिश्य। किमियं विधिकृता घटना ?

"असंकल्पितमेवेह यदकस्मात्प्रवर्तते। निवर्त्यारब्धमारंभैर्ननु दैवस्य कर्म तत्" इति भगवान् वाल्मीकिः विधिं लक्षयति। विधिः कस्मादसंकल्पितं फलमुपनेतुं प्रवर्तते ? अकस्मादिति समाधीयते।

कस्मादिति न जानीमः। तत्र नरस्य न दोषः, यतः स संकल्पते सम्यक्, आरभते च साधु। विधिर्हि अन्तरा आयाति, आरब्धमन्यथयति। किं विधिरन्यथयितुं शक्यते? नेत्याह रामः "यदचिन्त्यं तु तद्दैवं भूतेष्वपि न हन्यते।" अन्यथयितुं शक्नुमः, यदि जानीमः किं विधिः संकल्पते, कथमारभते इति। यदारब्धं फलोन्मुखं फलितं वा, तत्र प्रतिविधानं नार्थाय। विधिकृतमिति तदेव जानीमः, यदा फलितप्रायम्। "कश्च दैवेन सौमित्रे योद्धुमुत्सहते पुमान्। यस्य नु ग्रहणं किंचित् कर्मणः अन्यत्र दृश्यते" इति धीरो रामः समादधाति लक्ष्मणम्। विधिविहितं कर्म संपन्नं सत् स्वहेतुं विधिमवगमयति। न ततः पूर्वम्। अस्तु। विधिमनुकूलयितुं शक्नुमः? "रज्ज्वेव पुरुषं बध्वा कृतान्तः परिकर्षति। विधिर्नूनमसंहार्यः प्राणिनां प्लवगोत्तम। सौमित्रिं मां च रामं च व्यसनैः पश्य मोहितान्।" इति सीता हनुमते स्वां दशां दर्शयति। सौमित्रेः कर्शनं सर्वथा दुःसहं तस्याः। स हि निष्कल्मषः रामायत्तजीवनः। विधिः कृतान्तः, संविधातव्येऽर्थे कृतनिश्चयः। स न चलति तस्मात्। विधातव्यतया समीहितादर्थात् न संकोचति, न परैः संकोचनं सहते वा। अतो "विधिर्नूनमसंहार्यः।" संहारः संकोचः, विहरणस्थान-मर्यादाकरणं वा। तर्हि विधिवश्या वयम्। तदा किमनेन चरैव चरैव इत्युपदेशेन। विचिकित्सते चेतः।

## जगद्गुरुः (३)

मुल्लैवासल् रा. कृष्णमूर्तिशास्त्री, एम्. ए. संस्कृतकालेज्,
मैलापूर्, मद्रास्–४

१० कपोतः—कपोतविषये इयं कथा प्राचीनतमा अन्वाख्यायते। कस्मिंश्चिदरण्ये कुत्रचिद्वृक्षे कश्चित् कपोतः अवसत्। तस्य भार्यापि अनुकूला अवर्तत। तौ दम्पती अन्योन्यस्य दृष्टिं दृष्ट्या

अङ्गमङ्गेन, बुद्धिं, बुद्धया च बबन्धतुः। शय्यायां, आसने, डयने, वार्तायां, क्रीडायां, अशने—एवं सर्वत्र सर्वदा मिथुनीभूय सुखं तौ चेरतुः। एवं परस्पराभिलाषापूरकौ तौ कालमनयताम्। तयोः अपत्यानि च कालेन उत्पन्नानि। तेषां कपोतशावानां बालक्रीडाः सञ्जाताः। तदा तयोः दम्पत्योः सन्तोषः असीमः समजनि इत्थं—

" पुपुषतुः प्रीतौ दम्पती पुत्रवत्सकौ।
शृण्वन्तौ कूजितं तासां निर्वृतौ कलभाषितैः॥
तासां पतत्त्रैः सुस्पर्शैः कूजितैर्मुग्धचेष्टितैः।
प्रत्युद्गमैरदीनानां निस्सीमां मुदमापतुः॥

कदाचित् अपत्यपालनाय तेभ्यः आहारमानेतुं तौ दम्पती धान्यकणार्थिनौ बहिर्गतौ। तदा कश्चन व्याधः यदृच्छया तान्कपोतशावकान् जालेन गृहीतवान्। दम्पती तु प्रत्यावृत्य स्वनीडे स्वशिशून् अदृष्ट्वा भृशं दुःखितौ। तयोः मध्ये कपोती तान् अन्विष्यन्ती उड्डीय किञ्चिद्दूरे जालसंवृतान् स्वशिशून् भूतले निक्षिप्तान् वीक्ष्य तस्यान्तः स्वयमपि अबध्यत।

एतस्यां दशायां करुणापूरितमानसः कपोतः एवमचिन्तयत्—' अहो मम शिशवः नष्टाः! मम प्रियतमापि भार्या प्रणष्टा! शून्यः सञ्जातः अहम्। इतः परं किमर्थं जीविष्ये ? ' इति। तदैव स लुब्धकः तमपि बाणेनापातयत्। एवं सकुटुम्बः स पञ्चत्वं प्राप्तः।

अनया कथया कपोतद्वारा अस्माभिः इदं ज्ञातव्यं—" गृहदारपुत्रादिषु अतीव आसक्तिः न कार्या " इति। तथा चोक्तम्—

एवं कुटुम्ब्यशान्तात्मा द्वन्द्वारामः पतत्रिवत्।
पुष्णन्कुटुम्बं कृपणः सानुबन्धोऽवसीदति॥
यः प्राप्य मानुषं लोकं मुक्तिद्वारमपावृतम्।
गृहेषु खगवत्सक्तः तमारूढच्युतं विदुः॥ इति।

# महान्तस्ते (१)

## काव्यकण्ठ गणपतिशास्त्री (२)

ततः श्लोकव्याख्यानपरिपाटी परीक्षिता, यत्र वयसा यवीयानपि ओजसा सारिष्ठवाग्वैभवेन च वर्षीयानिवायं रसनाग्रे स्वतो नृत्यन्तीं देवीं वाचमनुभावयामास। क्वचित्क्षणमन्यमनस्केन स्खलितमिव तेन। यमवकाशमुपलभ्य अंबिकादत्तः परीक्षकप्रवरो 'विरम क्षणं' इति वदन्नेवं अधिचिक्षेप—

'अनवद्ये ननु पद्ये गद्ये ह्यद्येऽपि ते स्खलति वाणी।
तत्किं त्रिभुवनसारा तारा नाराधिता भवता ?॥'

अप्रतिहता वाग्झरी वाग्देव्या आराधनैकलभ्या। तारा वाग्देवी दशमहाविद्यासु अन्यतमा विबुधैरुपास्यते। सा किं नोपासिता त्वया, यतोऽपशब्दं प्रयुञ्जसे इति साकूतमुवाच। झटिति प्रतिवदति स गणपतिः।

"सुधां हसन्ती मधु चाक्षिपन्ती यशो हरन्ती दयिताधरस्य।
न तेऽलमास्यं कविता करोति नोपास्यते किं दयितार्धदेहः॥"

"स्त्र्येवोपासिता भवता। न पुमान्। सारशब्दो नेह विशेष्यलिंगः। सार इति वक्तव्ये, तारेतिशब्दप्रासाशया सारेति असाध्वेव प्रयुक्तम्।" अंबिकादत्तो जगर्ज—

उच्चैः कुञ्जर मा कार्षिर्बृंहितानि मदोद्धतः।
कुंभिकुंभामिषाहारी शेते संप्रति केसरी॥

गणपतिराचिक्षेप — 'पुनश्च दोषः। न कर्मधारयान्मत्वर्थीयः। (कुंभिकुंभामिषाहार इति बहुव्रीहिः स्यात्।) हारी—केसरी इति प्रासायासाधु प्रयुज्यते ?

समासीनो रसाले चेन्मौनमावह मौकले ।
लोकः करोतु सत्कारं मत्वा त्वामपि कोकिलम् ॥"

अंबिकादत्तः —ज्योतिरिंगण न किंनु मन्यसे
यत्त्वमेव तिमिरेषु लक्ष्यसे ।

गणपतिः —किन्नु दीप भवने विभाससे
वायुना बहिरहो विधूयसे ॥

एवं क्रमेण परस्परनिन्दापदमवतीर्णो वादक्रमः देश्यनिन्दापदमवाप ।

अंबिकादत्तः —भट्टोऽखिलोऽट्टोपरि वारवध्वा
निपीय मध्वारभते विहारम् ।

गणपतिः —अमुष्ययो वाऽस्तु वमुष्ययो वाऽ-
प्यमी न मीनव्यसनं त्यजन्ति ।

'अमीनमीन' इति प्रासोऽम्बिकादत्तं तथा प्रसादयामास । पण्डितवरः शितिकण्ठवाचस्पतिर्माध्यस्थ्ये स्थितः वादमुपसंजहार । रसिकाग्रणीरंबिकादत्तो वृद्धो युवानमिममाशिश्लेष सुनिर्भरं, आमुमोद वचसाऽनुपाधिकेन तस्य कविताप्रागल्भ्यम् । गणपतिः सविनयं "वादेऽस्मिन् ममापराधाः क्षन्तव्याः" इति प्रार्थयत । अंबिकादत्तोऽपि तव 'मीढ्वयं सर्वानपराधान् पर्यमार्क्षीत्" इति सहर्षं व्याजाहार । तदानीमेवास्मै काव्यकण्ठः इत्युपहारः पण्डितपरिषदा दत्तः । प्रशस्तिरियं तस्य—

प्राचीनैस्तैः कविकुलवरैः कालिदासादिभिर्या
लब्धा कीर्तिर्भवदनुगता सैव भूयादिदानीम् ।
सद्भिर्दत्तो य इह रुचिरः काव्यकण्ठोपहारः
तेन श्रीमानिह भुवि भवानुज्ज्वलश्चापि भूयात् ॥

व्यतिषजति पदार्थानान्तरः कोऽपि हेतुः

गुरुसखिसहगोत्रान् पश्यतो युद्धभूमौ
प्रथितविपुलकीर्तेर्बन्धिनामर्जुनस्य ।
निपतति भुवि चापो धैर्यलक्ष्म्या समं यत्
व्यतिषजति पदार्थान् आन्तरः कोऽपि हेतुः ।

मुकुटभरणलग्नं निश्चितं वंशमित्रैः
सचिवजनसमूहात् संमतिश्चाभिलब्धा ।
पिहितभरतविघ्नो भूपतिः प्राप नेष्टं
व्यतिषजति पदार्थान् आन्तरः कोऽपि हेतुः ॥

बहुमतजनतन्त्रे नीतयो बुद्धिमद्भिः
बहुदिवसविचारैः कल्पिताः स्थापिताश्च ।
क इह फलितोऽर्थो नीतिभेत्तृप्रभावो
व्यतिषजति पदार्थान् आन्तरः कोऽपि हेतुः ॥

—ई. एस्. राममूर्तिः, कुंभघोणम्

---

**'GAYATRI'** booklet in English by
Justice, Sri M. N. SHUKLA,
*17, Sardar Patel Marg, Allahabad. (U. P.)*

*In this short publication the learned author, a judge of the High Court of Judicature, Allahabad portrays his personal experiences and effects of 'Gayatri Upasana". Quotations in Sanskrit are profusely given at appropriate contexts. The publication serves as an eye-opener to those who have rather faint belief in the efficacy of our Mantras. Young educated men may well profit by going through this brochure.*

“ கங்கையாம், பொன்னியாம் கன்னிநீத்தமே
காவிரிநீர்ப் பெருந்தீர்த்தம் கலந்தாடிக் கடந்தேறி ”
(சேக்கிழார்—பெரியபுராணம்)




*With Best Compliments From :*

## Light Roofings Ltd.

(Manufacturers of Asphaltic Roofing Sheets)

226, Lloyds Road,

**MADRAS–600 086.**

Phone : 810725
810726
810727

# SIMCO METERS LIMITED

## METER FACTORY ROAD

## TIRUCHIRAPALLI — 620021.



**Manufacturers of :**

Polyphase, Single phase Maximum Demand Meters, Two Part Tariff Meters and Three Part Meters.

**Also we make for Defence :**

Fire Alarm System in Vyjayanta Tanks, Panel Generators and Junction Boxes for use in Vyjayanta Tanks, Ground Power Units for Aircrafts, Inter Vehicle Starting Cables and High Energy Battery.

Telegram : SIMCOMETERS

Phone : 25211

Telex : 0455 - 216

சபலத்தை விட்டு முன்னமேயே உனக்கு உகந்த தரையில் உட்கார்ந்தாயா என்ன? எதற்கு மேலே சென்ருய்? இந்த அவமதிப்பை எதற்கு அடைந்தாய்? 58

जगति दुर्लभवस्तुनि चापलं जनिमतामवमानकरं परम् ।
इति न किं भवता क्वचन श्रुतं बत वृथाऽवमतिं भजसे कुतः ॥

உலகில் கிடைக்காத பொருளில் சபலம்கொள்வது மனிதனுக்கு மிகுந்த அவமதிப்பைத் தருவது என்பதை நீ எங்கும் கேட்டதில்லையா? ஆச்சரியம்! வீணே ஏன் இப்படி அவமதிப்பை அடைகிருய்? 59

विमलवंशभुवां किल मानिनामवमतिर्मरणादतिदुःसहा ।
यदि तवास्ति मनागपि मानिता किमधिरोढुममुं पदमैहथाः ॥

அப்பழுக்கற்ற குலத்தில் தோன்றிய மானமுள்ளவர்களுக் கல்லவா அவமானம் மரணத்தைவிடத் தாங்கவொண்ணுதது? உனக் குச் சிறிதேனும் மானமிருக்குமானுல் இந்த இடத்தில் ஏற முயன் றிருப்பாயா? 60

किमथवा त्वयि या जननी सदाप्यवमतैव तु जीवति तावकी ।
तव तदंगभवस्य मतिः कथं बहुमतावमते गणयिष्यति ॥

உன்னிடத்தில் என்ன? உனது தாயும் எப்போதும் அவமதிப் புள்ளானவளானுலும் பிழைத்திருக்கிருள். அவள் உடலில் தோன்றிய உனது புத்தி வெகுமதிப்பையும் அவமதிப்பையும் எங்கு பொருட்படுத்தப்போகிறது? 61

तदिह किं वचनैरधिकैरिदं शृणु सुनिश्चितमत्र वदे तव ।
यदधिरोहणचापलमस्ति तत्र च पिताऽयमहं च सहावहै ॥

இங்கு அதிகம் பேசி என்ன? இதனைக்கேள். நன்கு உறுதி யானதை உனக்குச் சொல்கிறேன், உனது (மடிமேல்) ஏறும் ஆசையை உன் தந்தையும் நானும் பொறுக்கமாட்டோம். 62

पितृमतोऽपि हि ते सदृशीं स्थितिं मम सुतेन तु नैव सहे ध्रुव ।
विषमयोः समलालनमीक्षितुः कलयितुश्च महान्हि मतिभ्रमः ॥

துருவ! தகப்பனுள்ளவனுயிருந்தாலும் உனக்கு என் பிள்ளைக்கு ஈடான நிலையை நான் பொறுக்கவே மாட்டேன். இணையில்லாத

இருவரை ஒரே சீராக லாலனை செய்வதைப் பார்ப்பவனுக்கும் அப்படி லாலனை செய்பவனுக்கும் பெருத்த மனப்பிரமை அல்லவா? (மனப் பிரமை இல்லாதவன் லாலனை செய்வானு? அதைப் பார்த்துப் பொறுத் திருப்பானு?) 63

इति कठोरतरं कथयन्त्यसावपि पुरो निजभर्तुरशंकितम् ।
द्रुतमधोऽपि निकृष्य हठादहो सुरुचिरासयति स्म तमर्भकम् ॥

இப்படி மிகக் கடுரமாகச் சொல்லிக்கொண்டே தன் கணவனுக்கு எதிரிலேயே ஸுருசி அந்தச் சிறுவனைக் கூச்சமின்றி விரைவாகக் கீழே இழுத்தெறிந்தாள். 64

सुरुचिवाङ्मुखशातशिलीमुखैरिति हतः स हि मर्मणि बालकः ।
बत सुनीतिभवो बहु विव्यथे किमु सहेत महस्विजनो वचः ॥

ஸுநீதியின் மகனை அந்தச் சிறுவனும் ஸுருசியின் சொல் லாகிற கூரிய நுனியுள்ள அம்புகளால் இதய மர்மங்களில் அடி பட்டவனுக மிகவும் துடித்தான். பெருமையுள்ள மக்கள் சொல் பொறுப்பார்களா? 65

कटुतरैः सुरुचीवचनैरयं प्रकुपितः स्फुरिताधरपल्लवः ।
प्रसभमुद्गलदश्रुभराविले पितरि पातयति स्म दृशौ ध्रुवः ॥

மிகவும் கேட்கத்தகாத ஸுருசியின் சொற்களால் சினந்தவனு கவும் துடிக்கும் மென்மையான உதடுகளுள்ளவனுகவும், அந்த துருவன் விரைவில் பெருகும் கண்ணீரினிடையே கலங்கிய தோற்ற முள்ள தகப்பனுரிடம் தன் கண்களை மேயவிட்டான். 66

त्वयि पुरो मम तिष्ठति तातके समुचिते विषये परमुद्यतम् ।
सुरुचिरेवमिमं बत बालकं वितनुते यदिदं किमु ते मतम् ॥

"என் தகப்பனுரான நீங்கள் முன்னிருந்தும் தக்கதொரு காரியத்தில் மட்டும் ஈடுபட்ட இந்தச் சிறுவனை ஸுருசி இப்படிச் செய் கிருளே இது உங்களுக்குச் சம்மதமா?" 67

सकलसंकथनीययशोनिधेः सकलभूवलयाधिपतेरपि ।
कुधिषणैकवधूमुखमोहतो बत तवेयमभूद्गतिरीदृशी ॥

எல்லோராலும் பாராட்டத்தக்கப் பெருஞ் செல்வமாகப் புகழைக் கொண்டவரும், எல்லா பூமண்டலத்திற்கும் அதிபதியானவருமான

உங்களுக்கே புத்திகெட்ட ஒரு பெண்ணின் முகத்திலுள்ள மோகத்தால் இந்நிலை ஏற்பட்டுள்ளது! விந்தை தான்!! 68

इति सुतस्य दृशा परिबोधितो नृपतिरन्तरतप्यत सोऽप्यरम् ।
नियतमर्भकदुःखविलोकनं पितृजनस्य विशिष्य सुदुःसहम् ॥

இவ்வாறு பிள்ளையின் நோக்கால் அறிவுறுத்தப்பட்ட அரசர் மனத்தில் மிகவும் வேதனைப்பட்டார். சிறுகுழந்தையின் வாட்டத்தைக் காண்பது அதுவும் தகப்பனுயிருப்பவனுக்கு மிகவும் தாங்க வொண்ணுத துக்கமே. 69

व्यथितबालकमुग्धमुखेक्षणे सुरुचिवारणलोलमना अपि ।
कुपिततन्नयनाञ्चलताडितो नरपतिस्तनयं न्यरुरुत्सत ॥

துடிக்கும் சிறுவனின் பேதைமை நிரம்பிய முகத்தை நோக்குவதில் ஸுருசியின் தடையால் மனச் சஞ்சலப்பட்டவராயினும், சினம் மிகுந்த அவளது கடைக்கண்களால் அடிபட்ட அரசர் மகனைத் தடுக்க விரும்பினுர். 70

क्षणमसाविति संशयिना ततः स्वयमगादुभयोश्च तटस्थताम् ।
अभिमतं सुरुचेरतनोन्न यत् सुमहतीयममुष्य विवेकिता ॥

இவரும் இப்படி ஒரு நொடி ஸம்சயத்திற்குள்ளானவராகிப் பின் இருவருக்கும் பட்சபாதமற்றவராக இருக்கும் தன்மையைத் தானே அடைந்தார். ஸுருசி விரும்பியதைச் செய்யாதிருந்ததே அவரது மாபெரும் விவேகம். 71

सुभगतागुणगुंभितसूक्ष्मतन्नयनकोणशिताञ्चलसूचिभिः ।
नरपतेरधरोष्ठमसेवि यद्दृढमतो वदितुं न शशाक सः ॥

அழகாகிற நூலில் கோக்கப்பட்ட நுண்ணிய அவளது கண்ணேக்காகிற தீட்டப் பெற்ற நுனியுடன் கூடிய ஊசிகளால் அரசரின் கீழ் உதடு தைக்கப்பெற்றதாகையால் அவர் பேச முடியவில்லை. 72

पितरि जोषमुदासितरि ध्रुवः प्रबलमन्तरतप्यत तत्क्षणम् ।
अरचि यस्य बलादधिरोहणं स च पिता विपरीतमना इति ॥

தகப்பன் மௌனமாக பாராமுகமாக இருப்பதனுல், துருவன் உள்ளத்தில் பெரிதும் வேதனையுற்ருன், "எவரது மடியில் வலிவில் ஏறினேனே அந்தத் தகப்பனே மனமாற்றம் கொண்டவராக இருக்கிருரே" என. 73

विजननी सुरुचिर्व्यथयत्वसौ बत पितापि च संमनुते कथम्।
इति विचिन्तयतोऽस्य विलोचनादुदगलद्द्रुतमश्रुझरो हठात् ॥

"மாற்றாந்தாயான ஸுருசி வேதனைக்குள்ளாக்கட்டும். ஆனால் தகப்பனாரும் இதனை எப்படி சம்மதிக்கிறார்?" என்று எண்ணிய அவனது கண்களிலிருந்து உடன் வலிவில் கண்ணீர் பிரவாகம் பெருக்கெடுத்தோடுவதாகக் கசிந்தது. 74

सुरुचिपीडनतोऽपि सुदुःसहा पितुरुदासितृतैव तदाऽभवत्।
जगति विश्वसनीयजनान्यथास्थितिरतीव शुचे खलु देहिनाम् ॥

ஸுருசி தந்த வேதனையைவிட தகப்பனாரின் பாராமுகம் தாங்கவொண்ணாததாக அப்போது ஆகிறது. மனிதருக்கு உலகில் நம்பிக்கைக்குரியவரின் மாறுபட்ட நிலைதான் வேதனைக்குக் காரணமாகிறது அல்லவா? 75

मुखममुष्य तथाविधमुद्गलद्बहलबाष्पमवेक्ष्य च चक्षुषा।
क्षितिपतेर्हृदयेन न दुद्रुवे यदिदमद्भुतमेव सचेतसाम् ॥

அப்படி பெருகும் கண்ணீருனுடன்ள அவனது முகத்தைத் தன் கண்ணால் பார்த்தும் அரசனது இதயம் நெகிழவில்லையே. அதுதான் மனமுள்ளவர்களுக்கு விந்தையாக நின்றது. 76

सुरुचिवीक्षणकोणसमागमादुदितनिर्भरकर्कशतागुणे।
क्षितिभृतोऽन्तरमुष्य नवेक्षणं निर्विविशेऽश्मनि नीरनिषेकवत् ॥

அரசனின் மனத்தில் ஸுருசியின் பார்வையுடன் கலந்தமையால் ஏற்பட்ட அளவற்ற வரட்சியிடம் இவனது பார்வை கல்லில் மழை பொழிவது போல் பதிந்தது. (வீணானது) 77

इति सदसि सुरुच्या निष्ठुरैर्वाग्विपाठैः
तदनुसरणभाजा हन्त पित्रा च विद्धः।
झटिति जनकगेहान्निर्जगाम ध्रुवोऽयं
त्वविरतमपि नेत्रान्निष्पतद्बाष्पवर्षः ॥

இப்படிச் சபையில் ஸுருசியின் கடூரமான சொல்லம்புகளாலும் அவளைப் பின்பற்றும் அரசராலும் தாக்கப்பட்ட இந்த துருவன் அடங்காது பெருகும் கண்ணீர் மழையுள்ளவனாகத் தகப்பனிருப்பிடத்திலிருந்து வெளியேறினான். 78

श्रीगुरुभ्यो नमः

# ॥ संस्कृतश्रीः ॥

पाठमाला अनुबन्धः ७८ பாடமாலா தொடர் 78

## एकोनशततमः पाठः—பாடம் 99 (தொடர்ச்சி)

ஆசிரியன் आचार्यः ஆசிரியை आचार्या ஆசிரியனின் மனைவி आचार्याणी

நீண்ட ஆயுள் உள்ளவன் आयुष्मान् आयुष्मती

இந்திரன் इन्द्रः இந்திரனின் மனைவி इन्द्राणी

ஒட்டகை उष्ट्रः उष्ट्री

ஆசிரியர் उपाध्यायः ஆசிரியை उपाध्याया उपाध्यायी உபாத்தியாயரின் மனைவி उपाध्यायिनी

அடைந்தவன் उपेयिवान् उपेयुषी

ஆசைப்படுபவன் कामुकः காம இச்சை கொண்டவள் कामुकी பொருளாசை கொண்டவள் कामुका

செய்பவன் कर्ता कर्त्री

க்ஷத்திரியன் क्षत्रियः க்ஷத்திரியப்பெண் क्षत्रिया, क्षत्रियाणी க்ஷத்திரியனை மணந்த வேறு இனத்தை சார்ந்தவள் क्षत्रियी

யானை गजः गजी

அதிகப்பெரியவன் गरीयान् गरीयसी

செல்பவன் गन्ता गन्त्री

சென்றுகொண்டிருப்பவன் गच्छन् गच्छन्ती

பெரியவன், கனத்தவன் गुरुः गुर्वी (गुरुः என்றும் ருபம்)

குணமுள்ளவன் गुणी गुणिनी

மாடு மேய்ப்பவன் गोपः மாடு மேய்ப்பவள் गोपा மாடு மேய்ப்பவனின் மனைவி गोपी

மாடு மேய்ப்பவன் गोपालः गोपाला (गोपाली)

திருடுகின்றவன் चोरयन् चोरयन्ती
சிட்டுக்குருவி चटकः चटका
நரி जंबुकः जंबुका
நகரத்தான் जानपदः जानपदा (जानपदी)
யுவன் तरुणः तरुणी
இளைத்தவன் तनुः, तन्वी (तनुः)
நின்றவன் तस्थिवान् तस्थुषी
கொடுக்கிறவன் ददत् ददती
தடிபிடித்தவன் दण्डी दण्डिनी
அடிமை दासः दासी
கொடுக்கிறவன் दिशन् दिशन्ती
மனிதன் नरः (नारः), மனுஷி नारी
நடனம் புரிபவன் नर्तकः नर्तकी
கீரி नकुलः नकुली
யானை, பாம்பு नागः, नागा (नागी)
தலைவன் नेता नेत्री
திறமையுள்ளவன் पटुः पट्वी (पटुः)
கணவன் पतिः மனைவி पत्नी
தகப்பன் जनकः தாய் जननी
தந்தையின் தந்தை पितामहः தந்தையின் தாய் पितामही
தாயின் தந்தை मातामहः தாயின் தாய் मातामही

## शततमः पाठः—பாடம் 100

## ஸமாஸங்கள்—கர்மதாரயம்

## कर्मधारयसमासः

தத்புருஷஸமாஸம் வியதிகரண விசேஷணங்களைக் கொண்டு அமைத்ததைக் கற்றோம். அந்த விசேஷணங்களே ஸமாநாதிகரணங்களாக அமைவது கர்மதாரயம். ஸமாநாதிகரணம், வியதிகரணம் என்ற சொற்களின் பொருள்பற்றி 97வது பாடத்தின்

தொடக்கத்தில் கொடுக்கப்பட்ட குறிப்புகளைக் கவனிக்கவும். நீலக் கடல், செவ்வானம், சிறு துளி, பெரு வெள்ளம் முதலியவை இதற்கு உதாரணங்கள். இது ஏழுவகைப்படும். அவைகளை வரிசையாகக் காண்போம்.

1. விசேஷண-பூர்வபத-கர்மதாரயம்: இதில் விசேஷணம் முதல் பதமாகவும் விசேஷ்யம் பின்பதமாகவும் அமையும். இரண்டும் அபேத சம்பந்தத்தால் இணைந்திருக்கும்.

1 नीलं + उत्पलं = नीलोत्पलं நீலநிறமுள்ள அல்லி
2 पीतं + अंबरं = पीतांबरं மஞ்சள் நிறமுள்ள ஆடை
3 उष्णं + उदकं = उष्णोदकं சூடான நீர்
4 कठिना + शिला = कठिनशिला கடினமான பாறை
5 दरिद्रः + याचकः = दरिद्रयाचकः ஏழையான யாசகன்
6 पक्वानि + फलानि = पक्वफलानि பழுத்த பழங்கள்
7 रक्ता + मञ्जरी = रक्तमञ्जरी சிவந்த பூங்கொத்து
8 मधुरा + कविता = मधुरकविता இனிய கவிதை
9 विकसन्ती + जाती = विकसज्जाती மலர்ந்து கொண்டிருக்கும் ஜாதிப்பூ
10 बृहती + कथा = बृहत्कथा பெருங்கதை
11 प्रवहन्ती + नदी = प्रवहन्नदी பெருகிக்கொண்டிருக்கும் ஆறு

குறிப்பு: ஸ்திரீலிங்கத்திலோ நபும்ஸகலிங்கத்திலோ வரும் விசேஷணங்கள் பும்லிங்கப்பகுதிகளாக மாறுகின்றன. நபும்ஸக லிங்கத்தில் உள்ள விசேஷணங்களில் வேறுபாடு தெரிவதில்லை. ஸ்திரீலிங்கத்தில் உள்ள விசேஷணங்களில் மட்டும் வேறுபாடு தெரியும்.

2. விசேஷண-உத்தரபத-கர்மதாரயம்: இதில் விசேஷணம் முன்பதமாக அமைகிறது. இப்படி வரும் விசேஷணங்கள் பெரும்பாலும் இழிவையும் வெறுப்புணர்ச்சியையும் வெளியிடும். ராமுத் தடியன் எங்கே? வேலைக்காரக்கிழவன் எங்கே தொலைந்தான்? என்பது போல் இவை அமையும். இழிவையோ வெறுப்புணர்ச்சியையோ குறிப்பிடாத வரை விசேஷணங்கள் முன்பதமாகத்தான் அமையும்.

| விசேஷணம் பூர்வபதம் | பொருள் | விசேஷணம் பின்பதம் |
|---|---|---|
| दुष्टः सर्पः-दुष्टसर्पः | பொல்லாத பாம்பு | सर्पः दुष्टः-सर्पदुष्टः |
| हतकः विधिः— हतकविधिः | பாழும் விதி | विधिः हतकः— विधिहतकः |
| खसूचिः वैयाकरणः— खसूचिवैयाकरणः | வானம் பார்க்கும் இலக்கணமாணவன் | वैयाकरणः खसूचिः— वैयाकरणखसूचिः |

(கேள்விக்குப் பதில் தெரியாமல் வானம் பார்த்து யோசிக்கும் மாணவன்—நன்கு படிக்காதவன் என்ற பொருளில் वैयाकरण-खसूचिः)

---

**Statement about ownership and other particulars about Newspaper 'SAMSKRITA-SRI'**

FORM IV (Vide Rule 8)

1. Place of Publication ... TIRUCHIRAPALLI
2. Periodicity of its Publication ... Fortnightly
3. Printer's Name ... S. Naganathan
   ,, Nationality ... Indian
   ,, Address ... Theni Printers. No. 7, Thyagaraja (Butterworth) Road, Tiruchirapalli-2.
4. Publisher's Name ... A. Kuppuswami
   ,, Nationalliy ... Indian
   ,, Address ... 9, Single Mall Street, Tiruchirapalli-2.
5. Editor's Name ... S. V. Radhakrishna Sastry
   ,, Nationalily ... Indian
   ,, Address ... 25, Tanjore Tank Street, Tiruchirapalli-2,
6. Names and addresses of individuals who own the Newspaper and Partner or Shareholders holding more than one percent of the total capital. ... THE SAMSKRIT EDUCATION SOCIETY (Regd. Madras) BRANCH 9, Single Mall Street, TIRUCHIRAPALLI-620 002,

I, A. KUPPUSWAMY, hereby declare that the particulars given above are true to the best of my knowledge and belief.

TIRUCHIRAPALLI, 7—3—1981

(*Sd.*) **A. Kuppuswamy,**
Publisher.

"திறனல்ல தற்பிறர் செய்யினும் நோநொந்து
அறனல்ல செய்யாமை நன்று" திருக்குறள்





REGD. TRADE MARK

பளயகாட்ஸ்
சங்கு மார்க்
லுங்கிகள்
கைக்குட்டைகள்



மதறாஸ் பளயகாட் கம்பெனி(பி)லிட்.
88 அரண்மனைக்காரத் தெரு, சென்னை-600 001.

*With the best compliments of:*

# SANGU MARK

**Handloom Lungies & Kerchiefs**



Manufacturers:

**THE MADRAS PALAYAKAT CO. (P) LTD.,**

Phone: **23040**

88, Armenian St., MADRAS-600 001.

R. N. 30478/77—SAMSKRITA SRI—7-3-81
TN/TR/53 Dt. 1-10-80 S. S. P. TRICHY.

## Watch Your Money Grow Before Your Very Eyes

**Invest in our SPECIAL TERM DEPOSIT SCHEME**
**Your Rs. 3,000/- today multiplies and becomes Rs. 8,056-50.**

**OR**

**Purchase a CASH CERTIFICATE For Rs. 3,724-30 which gives you back Rs. 10,000/- in 10 years.**

**Is this not the best way of saving for Your Daughter's Marriage.**

**Our Nearest branch will give you more details of our Special Term Deposit Scheme, Cash Certificate Scheme etc., etc.**



## State Bank of Hyderabad

(A member of State Bank Group having the largest network of branches in the world.)

Printed by S. Naganathan, at Theni Printers, Trichy. Edited by Vaidya S. V. Radhakrishna Sastri and Published by A. Kuppuswamy, B. A., B. T., on behalf of the Samskrit Education Society, (Regd.) Trichy Branch : 9, Single Mall Street, Tiruchirapalli-620 002.